*Kanpur Philosophers, ISSN 2348-8301*
*International Journal of humanities, Law and Social Sciences*
*Published biannually by New Archaeological & Genological Society*
*Kanpur India*




*Vol. IX, Issue I(B), July 2022*
DOI: 10.13140/RG.2.2.34832.89603
www.kanpurhistorians.org

# कादम्बरीहर्षचरितयोः काव्यसौन्दर्यम्

**प्रो. प्रसूनदत्तसिंहः**
अधिष्ठाता, मानविकी भाषासङ्कायश्च
महात्मागान्धीकेन्द्रीयविश्वविद्यालयः, मोतिहारी, बिहारः
**सुपर्णा सेनः**
शोधच्छात्रा, संस्कृतविभागः
महात्मागान्धीकेन्द्रीयविश्वविद्यालयः, मोतिहारी, बिहारः

प्राचीनकालादेवगद्यकाव्यस्येतिहासे सर्वोच्चमहिमामण्डितस्य बाणभट्टस्य सार्वभौमप्रतिष्ठाव्याहतास्ति। कादम्बर्यां हर्षचरिते च कवेर्बाणस्यकविप्रतिभायाः व्याप्तिर्गभीरता च दृश्येते। **'बाणोच्छिष्टंजगत्सर्वम्'** ,वाक्यमिदं संस्कृतसाहित्यजगत्सम्बन्धाःसर्वे जनाः जानन्ति।भोजनानन्तरंभोजनपात्रे यत्किञ्चिदवशिष्टं विद्यते तदेवोच्छिष्टमित्यभिधीयते। कविर्बाणभट्टःसंस्कृतसाहित्यजगतः सर्वाणिक्षेत्राणिस्वलेखन्या प्रतिपादयति। तर्हि बाणस्योच्छिष्टमेवसर्वं जगत्नास्त्यत्रसंशयः। गद्यकवीनां कृते आदर्शभूताबाणभट्टस्य रसभावपूर्णा शैली काव्यसौन्दर्यं वा सर्वदा सर्वेषां पाठकानां चित्तं हरति।कादम्बर्यां हर्षचरिते चकाव्यसौन्दर्यं कीदृगासीत्शोधलेखेऽस्मिन्नालोच्यते।

**सङ्केतशब्दाः**– बाणस्य रचनाशैली, बाणोच्छिष्टं जगत्सर्वम्, बाणभट्टः,गद्यकाव्यम्, हर्षचरितम्,कादम्बरी।

**बाणभट्टस्य काव्यसौन्दर्यम्** –संस्कृतगद्यलेखकेषु नितान्तप्रवीणो महाकविरस्ति बाणभट्टः।गोवर्धनाचार्यानुसारेणतु सरस्वत्यधिकप्रागल्भ्यतां प्राप्तये बाणो बभूव–

**"जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि।**
**प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति"** ।।

कादम्बरीहर्षचरितञ्चबाणभट्टस्यातीवप्रसिद्धेगद्यकाव्ये वर्तेते।गद्यकाव्येषु साधारणतःनवीनार्थः,ग्राम्यत्वदोषरहितायथार्थवस्तुवर्णना,सर्वजनसुबोधःशब्दानां द्वित्रार्थाभिधानम्, विभावादिभिर्झटितिसर्वजनसंवेद्यः शृङ्गारादिरसः,ओजपूर्णानामक्षराणां विन्यास एकत्रदुर्लभंभवति।तद्यथा कविना बाणेनोच्यते–

**"नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।**
**विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम्"**।।

बाणभट्टस्य गद्यकाव्ययोस्तु विषयस्य नवीनता, कल्पनाया मौलिकता, रोचका स्वभावोक्तिः, स्पष्टः श्लेषः , रसस्य सहजानुभूतिः, दृढबन्धयुक्ता पदावली चपाठकैर्दृश्यन्ते।एवं

महाकविना बाणभट्टेन गद्यशैल्या आदर्शः सूचितः। बाणभट्टस्य गद्यकाव्ययोःभावानांयथार्थचिन्तनमभिनवार्थानांकल्पनाचदृ
श्यते।महाकविर्बाणःस्वरचनासुवर्णनासौन्दर्यस्याभिनवत्वं दर्शयितुं भाषाभावशब्दार्थालङ्काररसादीनांसंयोगमकरोत्।
बाणभट्टः पाञ्चालीरीत्यनुसारेण अर्थगौरवसम्पन्नानां सुकुमारशब्दान्नरचयत्।तेन वैदर्भीगौडीलाट्यादीनां रीतीनां प्रयोगोऽपि क्रियते । कयाचिदेकयाशैल्या बाणभट्टः कविर्नासीत्। स हि विषयानुसारेण स्वकीयां शैलीं परिवर्त्तयति। विषयानुसारेणशब्दप्रयोगानामुदाहरणार्थं वयंकादम्बर्यां लक्ष्म्या प्रतारितानां नृपाणामवस्थावर्णनाःपश्यामः–**"केचिच्छ्रमवशशिथिलशकुनिगलपुटचपलाभिःखद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः सम्पद्भिः प्रलोभ्यमानाधनलवलोभावलेपविस्मृतजन्मनोऽनेकदोषोपचितेन दुष्टासृजेवरागावेशेनबाध्यमाना विविधविषयग्रासलालसैः पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः प्रकृतिचञ्चलतया लव्धप्रसरेणैकेनापिशतसहस्रतामिवोपगतेनमनसाकुलीक्रियमाणाविह्वलतामुपयान्ति"।**
साहित्यदर्पणकारस्याचार्यविश्वनाथस्य मतानुसारेणौजगुणप्रकाशकैर्वर्णैर्बन्ध आडम्बरपूर्णसमासवहुला रचना गौडीरीतिर्भवति।विन्ध्याटव्या वर्णनायां महाकविर्विकटशब्दैःसहसमासानां प्रयोगं कृतवान्।उदाहरणंयथा–**"क्वचित्प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणिमण्डला,क्वचिद्दशमुखनगरीवचटुलवानरवृन्दभज्यमानतुङ्गशालाकुला, क्वचिदचिरनिर्वृत्तविवाहभूमिरिव हरितकुशसमितकुसुमशमीपलाशशोभिता,क्वचिदुन्मत्तमृगपतिनादभीतेव कण्ठकिता"**।आचार्यविश्वनाथः साहित्यदर्पणेमाधुर्य्यब्यञ्जकैर्वर्णैरावृत्तिरल्पवृत्तिर्वा ललितात्मिका रचना वैदर्भीरीतिरूपेण प्रतिपादयति ।एवं कादम्बर्यांवैदर्भीरीत्या उदाहरणं यथा–**"न परिचयं रक्षति,नाभिजनमीक्षते, न रूपमालोकयते, न कुलक्रममनुवर्तते, न शीलं पश्यति,न वैदग्ध्यं गणयति, न श्रुतमाकर्णयति, न धर्ममनुरुध्यते, न त्यागमाद्रियते, न विशेषज्ञतां विचारयति, नाचारं पालयति, न सत्यमवबुध्यते, न लक्षणं प्रमाणीकरोति। गन्धर्वनगरलेखेव पश्यत इव नश्यति" ।**
बाणभट्टस्य गद्यकाव्ययोःमुक्तकवृत्तगन्ध्युत्कलिकाप्रायचूर्णकाणां चतुर्णां गद्यकाव्यानां प्रयोगःदृश्यते।साहित्यदर्पणकारस्याचार्यविश्वनाथस्य मतानुसारेण मुक्तकवृत्तगन्ध्युत्कलिकाप्रायचूर्णकञ्च गद्यकाव्यस्य भेदा भवन्ति।मुक्तकं भवति समासरहितम्,वृत्तगन्धिर्वृत्तभागान्वितं भवति, उत्कलिकाप्राये दीर्घः समासो भवति,चूर्णकेऽल्पसमासो भवति ।कादम्बर्यां मुक्तकस्योदाहरणं यथा–**"यश्च मनसि धर्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, मुखे शशिना, बले मरुता, रूपे मनसिजेन, तेजसि सवित्रा चेति"**।वृत्तगन्धिगद्यस्योदाहरणं यथा–**"अम्बिकाकरतलमिव रुद्राक्षग्रहणनिपुणम् शिशिरसमयसूर्य्यमिव कृतोत्तरासङ्गम्, वडवानलमिव सततपयोभक्ष्यम्, शून्यनगरीमिव दीनानाथविपन्नशरणम्, पशुपतिमिव भस्मपाण्डुरोमाश्लिष्टशरीरम्, भगवन्तं जाबालिमपश्यम्"** ।हर्षचरिते समासाढ्यढाक्षरयुक्तस्योत्कलिकाप्रायस्योदाहरणंयथा–**"कुलशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गोत्तमाङ्गमदच्छटाच्छुरितचारुकेसरभारभास्वरमुखे केसरिणि वनविहाराय विनिर्गतेनिवासगिरिगुहां कः पातिपृष्ठतः"** ।कादम्बर्यामल्पसमासयुक्तस्यचूर्णकस्योदाहरणं यथा–**"आसीदशेषनरपतिशिरः समभ्यर्च्चितशासनः पाकशासनइवापरः, चतुरुदधिमालामेखलाया भुवो भर्त्ता, प्रतापानुरागावनतसमस्तसामन्तचक्रः, चक्रवर्तिलक्षणोपेतः, चक्रधर इव करकमलोपलक्ष्यमाणशङ्खचक्रलाञ्छनः, हर इव जितमन्मथः, गुहः इवाप्रतिहतशक्तिः, कमलयोनिरिव विमानीकृतराजहंसमण्डलः"।**

चूर्णकेऽकठोराक्षरं स्वल्पसमासश्च तिष्ठत इति छन्दोमञ्जरीकारःगङ्गादासोऽपिप्रतिपादयति ।
धवलगृहस्य वर्णनायां प्रभाकरवर्धनस्यमृत्युदृश्यस्य वर्णनायामुज्जयिनीवर्णनायांविन्ध्याटवीवर्णनायां च ओजो गुणः प्रधानरूपेण दृश्यते।कादम्बर्यां हर्षचरिते च माधुर्यगुणस्य प्राधान्येऽपि ओजप्रसादौ गुणौ विरलौ न स्तः।
बाणस्य रचनासु श्रुतिस्मृतिदर्शनरामायणमहाभारतव्याकरणादिनांशास्त्राणां प्रतिफलनमभवत्। हर्षचरिते कविर्विविधशास्त्रपारदर्शिताविषये स्वस्यकथानामुल्लेखनमकरोत्–**"सम्यक्पठितः साङ्गो वेदः। श्रुतानि यथाशक्ति शास्त्राणि"**।अपि चकादम्बर्यां राजभवनस्य वैशिष्ट्यवर्णनाप्रसङ्गे **"पुराणमिव विभागावस्थापितसकलभुवनकोशम्","महाभारतमिव अनन्तगीताकर्णनानन्दितनरम्",**
**"व्याकरणमिवप्रथममध्यमोत्तमपुरुषविभक्तिस्थितानेकादेशकारकाख्यातसम्प्रदानक्रियाव्ययप्रपञ्चसुस्थितम्,"रामायणमिवकपिकथासमाकुलम्"**इत्यादिप्रयोगैःपाठकामहाकवेर्विविधशास्त्रपारङ्गताविषयान्जानन्ति ।
अलङ्कारप्रयोगेऽद्वितीयः कविर्बाणैवभवति। बाणभट्टस्य गद्यकाव्यव्योरुपमारूपकमुत्प्रेक्षापरिसङ्ख्यैकावलीश्लेषो विरोधाभासादयोऽलङ्काराविद्यमानाः सन्ति।उपमालङ्कारे प्रस्फुटं सुन्दरञ्च साम्यमुपस्थाप्यते। कादम्बर्यामुपमालङ्कारस्योदाहरणद्वये यथा–

- **"नवयौवनकषायितात्मनश्च सलिलानीव तान्वेव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः "।**
- **"लतेव विटपकानध्यारोहति, गङ्गेववसुजनन्यपितरङ्गबुद्बुदचञ्चला" ।**

उपमानोपमेययोरभेदः प्रस्तुताप्रस्तुतयोरभेदो वा रूपकालङ्कारस्य प्रमुखा विशेषता । रूपकालङ्कारस्योदाहरणद्वये यथा–

- **"गुरुपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलस्नानमनुपजातपलितादिवैरूप्यमजरं बृद्धत्वमनारोपितर्मेददोषं गुरुकरणमसुवर्णविरचनमग्राम्यं कर्णाभरणमतीतज्योतिरालोको नोद्वेगकरः प्रजागरः"**– अत्र सर्वत्राधिकाररूढवैशिष्ट्यरूपकालङ्कारोविद्यते।

अपि च–

- **"इयं हि सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी"।**

काव्यप्रकाशानुसारेण वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानम् स विरोधभासालङ्कार एव। कादम्बर्यां विरोधाभासस्योदाहरणं यथा–

- **"अनुज्झितधबलतापि सरागैव भवति यूनां दृष्टिः" ।**

आचार्यमम्मटस्य मतानुसारेणोत्प्रेक्षायामलङ्कारयुपमेयस्य समेन सम्भावनमुत्कोटिकसंशयो वा भवति । उत्प्रेक्षा बाणभट्टस्य प्रियोऽलङ्कारः।कादम्बर्यां हर्षचरिते चबहुषु स्थानेषु उत्प्रेक्षायाः छटा परिदृश्यते।उदाहरणानि यथा–

- **"कमलिनी सञ्चरणव्यतिकरलग्ननलिननालकन्टकक्षतेव न क्वचिदपि निर्भरमाबध्नाति पदम् "।**
- **"कमललोभनिलीनैरलिभिरिववृत्तावुद्धर्त्तुंनाशकच्चरणौ। मृणाललोभेन च चरणनखमयूखलग्नैर्भवनहंसैरिव सञ्चार्यमाणा मन्दमन्दं बभ्राम" ।**
- **"अग्निकार्यधूमेनेव मलिनी क्रियते हृदयम्" ।**

परिसङ्ख्यालङ्कारनिर्णयप्रसङ्गे काव्यप्रकाशस्य वृत्तावुक्तमस्तियत् **"प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति, सा भवेत् परिसङ्ख्या"।**
कादम्बर्यामेतादृशस्य परिसङ्ख्यालङ्कारस्योदाहरणंयथा–

- **"अन्तस्तरलता हारलतानाम्, वर्णपरीक्षा कनकानाम्"।**

हर्षचरिते यथा–

- **"अस्मिंश्च राजनि यतीनांयोगपट्टकाः, पुस्तकर्मणां पार्थिवविग्रहाः, षट्पदानां दानग्रहणकलहाः,वृत्तानां पादच्छेदाः, अष्टापदानां चतुरङ्गकल्पना, पन्नगानां द्विजगुरुद्वेषाः, वाक्यविदामधिकरणविचाराः"**इति।

साहित्यदर्पणकारस्य मतानुसारेण यदा पूर्वं पूर्वं प्रति विशेषणत्वेन परं परं स्थाप्यतेऽपोह्यते वा तदैकावल्यलङ्कारो भवति।कादम्बर्यां महाकविरेकावल्यलङ्कारस्य प्रयोगं कृतवान्–**"क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन, नवयौवनेन पदम्"।**
श्लेषेशब्दचयनेरसप्रतिपादनेऽलङ्कारसृजने च वाणो भवति पञ्चाननः।बाणस्य गद्यकाव्ययोःमूल्यायणं कृत्वा संस्कृतपण्डितश्चन्द्रदेवोक्तवान् यत–

**"श्लेषे केचन शब्दगुम्फविषये केचिद्रसे**
**चापरेऽङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने।**
**आसर्वत्र गभीरधीरकविताविन्ध्याटवी चातुरी,**
**सञ्चारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः"।।**

**उपसङ्हारः**

अन्तिमे एतद्वक्तुं शक्यते यत् बाणस्य गद्यकाव्ययोःपात्रचित्रणं प्रकृतिवर्णनं चासाधारणे स्तः।अलङ्कारप्रयोगे रूपकल्पनिर्माणे चरित्रचित्रणे च बाणे भवत्यसाधारणी कवित्वशक्तिः।एतेसर्वे गुणाः तिष्ठन्त्यपि कादम्बर्यां हर्षचरिते च विद्यमानैर्दीर्घसमासयुक्तपदैरनेके समये पाठकवर्गानिरुत्साहाभवन्ति। बाणस्य काव्यकानने विचित्रपुष्पाणां वर्णाढ्यसमारोहाः सन्त्यपि तत्र साधारणानां जनानां प्रवेशोऽधुनापिदुष्करएवास्ति।बेवरमहोदयोबाणगद्यं भारतीयसघनविपिनमिव भयावहं हिंसकपशुमिवाप्रसिद्धं तथा कठिनशब्दैर्मण्डितमिति प्रतिपादयति–

**"In Short, Bana's prose is an Indian wood where all progress is rendered impossible by the undergrowth until the traveller cuts out a path for himself and where even then he has to reckon with malicious wild beasts in the shape of unknown words that affright him."**

परन्तु एतत्वाक्यं सर्वथा न समीचीनम्। चित्रणस्य सजीवतायै पाञ्चालिरीतेः कविना बाणभट्टेन यथा विषयानुसारः शब्दप्रयोगः कृतः तथा गुरुगम्भीरविषयस्य वर्णनायां तेनसमासयुक्तानां दीर्घवाक्यानामाश्रयो नीतः । कादम्बर्यां हर्षचरिते च यथा समासबद्धदीर्घवाक्यानां प्रयोगाः लभ्यन्ते तथा यत्र तत्र लघुवाक्यानां प्रयोगं कृत्वा तेन सशक्त्या प्रभावोत्पादिका स्वशैली प्रदर्शिता। कादम्बरीगद्यकाव्यस्यान्तर्गते शुकनासोपदेशेउपदेशपरिमितवाक्यानि अत्यन्तानि सरलानि मधुराणि व्यजनादीप्तानि च । बाणस्य रचनाशैल्याः प्रशंसां कृत्वा धर्मदाससूरिणा यथार्थमेवुक्तम्

**"रुचिरास्वरवर्णपदा रसभाववती जगन्मनोहारिणि ।**

**तत् किं तरूणी  नहि नहि वाणी बाणस्य मधुरशीलस्य"।।**

**सहायकग्रन्थाः**

१)  हर्षचरितम, महाकविबाणभट्टविरचितम्, व्याख्याकारआचार्यः श्रीमोहनदेवपन्तः, मोतिलालबनारसीदासः, दिल्ली, २००१

२)  कादम्बरी, बाणविरचिता,पाण्डेयः श्रीरामतेजशास्त्री, 'अर्चना'हिन्दीटिकोपेता, चौखम्बाविद्याभवनम्, वाराणसी, २००७

३)  कादम्बरी,महाकविश्रीबाणभट्टविरचिता, व्याख्याकारः पण्डितः श्रीकृष्णमोहनशास्त्री, चौखम्भा प्रकाशनम, वाराणसी,२०१७

४)  संस्कृतसाहित्य का इतिहास, बलदेव उपाध्यायः, चौखम्बाविद्याभवनम्, वाराणसी, १९६३

५)  Harshacarita of Banabhatta P-V Kane Gurgaon back Road Bombay] 1918

६)  आर्यासप्तशती,श्रीगोवर्धनाचार्यविरचिता,पण्डितकेदारनाथशर्मणा काशिनाथपाण्डुरङ्गपरब इत्यनेन वासुदेवशर्मणा च संशोधिता, निर्णयसागरप्रेस्, मुम्बई, तृतीयसंस्करणम्१९३४

७)  काव्यप्रकाशः, मम्मटभट्टः, बङ्गानुवाद आलोचना चरू विजया गोस्वामी, सदेशप्रकाशनम्, कलकाता– ७००००६,द्वितीयसंस्करणम् २००७

८)  साहित्यदर्पणः, विश्वनाथकविराजकृतः,बङ्गानुवादः डॉ.विमलाकान्तःमुखोपाध्यायः, संस्कृतपुस्तकभाण्डारम्,कलकाता–६, द्वितीयसंस्करणम्, २०१३